# वैयाकरणसिद्धान्तकौमुद्यां कृदन्तप्रकरणम्

## अन्तिमपरीक्षा

**Date: 31 July 2021, 5:00 AM IST**

(72 hours duration)

**Total marks: 100**

**Course URL** - https://sanskritfromhome.in/course/kaumudi12-krdantas

**Instructions:**

- The exam contains 100 multiple choice questions. **Each question has one or more correct answers.** Points will be awarded only if all correct answers (and no wrong answers) are selected.
- This is an **open book test.** You can refer to books / notes / internet resources etc. However, please do not discuss the questions / answers with others.
- **Method of submission**: The answer-book for the exam is available on the last few pages of this document. Please take a printout of the answerbook, fill in your answers, scan it, and send it to neelesh.bodas@gmail.com with the subject - **SK Kridanta Final Exam Answersheet**. The deadline is 3rd Aug 2021, 5:00 AM IST.

Q1. अधोदत्तेभ्यः  के के  प्रत्ययाः कृत्संज्ञकाः सन्ति?

A) लट्    B) श    C) त्वन्    D) सन्    E) उ

Q2. अधोदत्तेभ्यः ग्रन्थेभ्यः सिद्धान्तकौमुदीग्रन्थस्य टीकाग्रन्थाः के के ?

A) बालमनोरमा    B) तत्त्वबोधिनी    C) लघुसिद्धान्तकौमुदी

D) प्रौढमनोरमा    E) पदमञ्जरी

Q3. भट्टोजिदीक्षितस्य मतेन कस्य कस्य वृत्तित्वं विद्यते ?

A) कृतः    B) तद्धितस्य    C) एकशेषस्य

D) सनादीनाम्    E) समासस्य

Q4. उपपदसमासस्य विषये अधोदत्तेभ्यः उचितानि वाक्यानि कानि ?

A) उपपदसमासः तत्पुरुषसमासस्य भेदः ।

B) उपसर्गः पूर्वपदम् अस्ति चेत् उपपदसमासः नैव सम्भवति।

C) उपपदसमासस्य उत्तरपदं कृदन्तम् भवेत्, न हि सुबन्तम्।

D) यत्र यत्र उपपदं विद्यते तत्र तत्र अवश्यम् उपपदसमासः करणीयः ।

E) उपपदसमासस्य अलौकिकविग्रहे उपपदस्य निर्देशः षष्ठी-विभक्तेः प्रत्ययेन सह करणीयः ।

Q5. “तत्रोपपदम् सप्तमीस्थम्” - इति कीदृशं सूत्रम् ?

A) संज्ञासूत्रम्    B) परिभाषासूत्रम्    C) नियमसूत्रम्

D) अतिदेशसूत्रम्    E) अधिकारसूत्रम्

Q6. अधोदत्तेषु केषु प्रत्ययेषु विद्यमानः पकारः तुगागमार्थः नास्ति ?

A) ल्यप्    B) क्वरप्    C) अप्    D) कप्    E) क्यप्

Q7. “धात्वादेः षः सः” इत्यस्य सूत्रस्य प्रयोगे किं किं कार्यं सम्भवति ?

A) षकारस्य सकारः

B) णकारस्य नकारः

C) ठकारस्य थकारः

D) चकारस्य तकारः

E) ढकारस्य धकारः

Q8. “ऋहलोर्ण्यत्” इति सूत्रेण विहितः ण्यत्-प्रत्ययः अधोदत्तेभ्यः केभ्यः धातुभ्यः विधीयते?

A) अस्-धातुः

B) वह्-धातुः

C) इण्-धातुः

D) वृत्-धातुः

E) लभ्-धातुः

Q9. “नी + अनीयर्” इत्यत्र “अचि श्नुधातुभ्रुवां य्वोरियङुवङौ” इत्यनेन “नी” इत्यस्य “निय्” इति आदेशः सम्भवति । तस्मिन्नेव समये “सार्वधातुकार्धधातुकयोः” इत्यनेन “नी” इत्यस्य “ने” इति आदेशः अपि भवितुम् अर्हति । कथम् विद्यते अत्र बाध्यबाधकभावः ?

A) विप्रतिषेधेन पूर्वात् परं बलीयः

B) पूर्वविप्रतिषेधेन परात् पूर्वं बलीयः

C) अनित्यात् नित्यं बलीयः

D) बहिरङ्गात् अन्तरङ्गं बलीयः

E) उत्सर्गात् अपवादः बलीयान्

Q10. ण्वुल्-प्रत्यये कस्य कस्य अनुनासिकत्वम् ?

A) णकारस्य

B) वकारस्य

C) उकारस्य

D) लकारस्य

E) कस्यापि अनुनासिकत्वं नास्ति

Q11. “हन् + शतृ” इत्यत्र प्रक्रियायाम् अधोदत्तेभ्यः कानि सूत्राणि प्रयुक्तानि दृश्यन्ते ?

A) गमहनजनखनघसां लोप क्ङित्यनङि

B) विभाषा गमहनविदविशाम्

C) हनस्तोऽचिण्णलोः

D) हो हन्तेर्ञ्णिन्नेषु

E) हन्तेरत्पूर्वस्य

Q12. “रलो व्युपधाद्धलादेः संश्च” अस्य सूत्रस्य उचितानि उदाहरणानि कानि ?

A) उठ् (भ्वादिः) + क्त्वा
B) लिख् (तुदादिः) + क्त्वा
C) विद् (अदादिः) + क्त्वा
D) कुष् (दिवादिः) + क्त्वा
E) भिद् (रुधादिः) + क्त्वा

Q13. “धनकाम्य + तृच्” इत्यत्र प्रक्रियायाम् अधोदत्तेभ्यः कानि सूत्राणि प्रयुक्तानि दृश्यन्ते ?

A) अतो लोपः
B) यस्य हलः
C) क्यस्य विभाषा
D) णेरनिटि
E) निष्ठायां सेटि

Q14. “डुकृञ् (करणे)” इत्यस्मात् धातोः निर्मितेभ्यः अधोदत्तेभ्यः प्रातिपदिकेभ्यः केषां सिद्धिः द्वयोः भिन्नयोः कृत्प्रत्यययोः आधारेण भवितुम् अर्हति ?

A) कर्तव्य
B) कृत
C) कार
D) कर
E) कर्तृ

Q15. “चुर् + णिच्” इत्यत्र विद्यमानस्य णिच्-प्रत्ययस्य केषु प्रत्ययेषु परेषु लोपः भवति ?

A) क्विप्
B) घञ्
C) क्त
D) ल्यप्
E) ल्युट्

Q16. अधोदत्तेभ्यः केषाम् धातूनां विषये अधिकरणे क्यप्-प्रत्ययः कृतः दृश्यते ?

A) पच्
B) भिद्
C) पुष्
D) कुप्
E) सिध्

Q17. “आयादय आर्धधातुके वा” इत्यत्र “आयादय” इत्यनेन अधोदत्तेभ्यः के के प्रत्ययाः गृह्यन्ते ?

A) आय
B) सन्
C) आम्
D) तृच्
E) णिङ्

Q18. अधोदत्तेभ्यः केषाम् प्रक्रियायाम् आदौ नकारागमः, ततः नकारलोपः कृतः दृश्यते ?

A) मथित
B) मग्न
C) विलगित
D) नष्ट
E) भग्न

Q19. "यायावर" शब्दस्य सिद्धौ "न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु" अस्य सूत्रस्य के के अंशाः प्रयुज्यन्ते ?

A) पदान्त B) वरे C) यलोप D) दीर्घ E) चर्

Q20. उणादिपाठस्य केषुचन संस्करणेषु "जीवे रदानुक्" इति सूत्रम् विद्यते । अनेन सूत्रेण "जीव्" धातोः "रदानुक्" इति प्रत्ययः विधीयते । अस्य प्रत्ययस्यप्रयोगेण कस्य प्रातिपदिकस्य निर्माणं भवेत् ?

A) जीरदानु B) जीव्रदानु C) ज्यूरदानु

D) ज्युरदानु E) जीविरदानु

Q21. अधोदत्तेषु अव्ययसंज्ञकानि कृदन्तानि कानि ?

A) जीवनाशम् B) भयङ्करम् C) ईषदाढ्यम्भवम्

D) सर्वप्रदम् E) कन्यादर्शम्

Q22. अधोदत्तेषु के के शब्दाः ताच्छीलिके अर्थे उचिताः ?

A) गम् + वुञ् → गामक B) गम् + कि → जग्मि

C) गम् + उकञ् → गामुक D) गम् + इष्णुच् → गमिष्णु

E) गम् + चानश् → गच्छमान

Q23. अधोदत्तेभ्यः केषाम् प्रक्रियायाम् कश्चन आगमः विधीयते ?

A) दृश् + तव्य → द्रष्टव्य B) भ्रस्ज् + अनीयर् → भर्जनीय

C) ऋ + शतृ → इय्रत् D) हन् + घञ् → घात

E) प्रछ् + क्त्वा → पृष्ट्वा

Q24. अधोदत्तेभ्यः केभ्यः धातुभ्यः क्यप्, ण्यत्, यत् - त्रयः अपि प्रत्ययाः भवन्ति ?

A) हन्  B) ग्रह्  C) मृज्  D) वद्  E) वृष्

Q25. "दो दद्घोः" इत्यत्र भाष्यकारस्य मतेन के के आदेशाः उचिताः ?

A) दत्  B) दथ्  C) दद्  D) दध्  E) दन्

Q26. "तुड् (तोडने, तुदादिः) + क्त्वा" इत्यस्य प्रकिया कथं सिद्ध्यति ?

A) प्रत्ययस्य नित्यं कित्त्वात् गुणनिषेधे "तुडित्वा" इति रूपं सिद्ध्यति ।

B) प्रत्ययस्य नित्यं ङित्त्वात् गुणनिषेधे "तुडित्वा" इति रूपं सिद्ध्यति ।

C) प्रत्ययस्य नित्यं अकित्त्वात् अङित्त्वात् च उपधागुणे कृते "तोडित्वा" इति रूपं सिद्ध्यति ।

D) प्रत्ययस्य विकल्पेन अकित्त्वात् पाक्षिके उपधागुणे कृते "तुडित्वा/तोडित्वा" इति रूपद्वयं सिद्ध्यति ।

E) प्रत्ययस्य विकल्पेन अङित्त्वात् पाक्षिके उपधागुणे कृते "तुडित्वा/तोडित्वा" इति रूपद्वयं सिद्ध्यति ।

Q27. "वचिस्वपियजादीनां किति" इत्यस्य सूत्रस्य स्थाने "वचिस्वपियजादीनां क्ङिति" इति सूत्रं क्रियते चेत् अधोदत्तेभ्यः केषां कृदन्तानां सिद्धौ दोषः आगच्छेत्?

A) प्रश्न  B) यज्ञ  C) स्वप्न  D) उक्त  E) शून

Q28. यस्य कृत्प्रत्ययस्य योजनेन "शस्त्र" इति प्रातिपदिकम् सिद्ध्यति, सः एव कृत्प्रत्ययः "पू" धातोः प्रयुज्यते चेत् किम् प्रातिपदिकम् सिद्ध्येत् ?

A) पुत्र  B) पूत्र  C) पोत्र  D) पौत्र  E) पवित्र

Q29. अधोदत्तेभ्यः केषाम् प्रक्रियायाम् "अतो लोपः" इति सूत्रम् प्रयुज्यते ?

A) बुभुक्षित  B) कथित  C) कामित

D) पुत्रकामित  E) चोरित

Q30. “घ्रा” इति भ्वादिगणस्य धातोः शतृ-प्रत्यये कृते “जिघ्रत्” इति प्रातिपदिकं सिद्ध्यति । यदि अयं धातुः भ्वादिगणात् निष्कास्य जुहोत्यादिगणे “डुभृञ्” इत्यस्मात् अनन्तरं संस्थाप्यते, तर्हि तस्य शतृ-प्रत्ययान्तरूपं किं भवेत् ?

A) जिघ्रत्  B) जिघ्रात्  C) जघ्रत्  D) जघ्रात्  E) जाघ्रात्

Q31. एतेषु के शब्दाः असाधु ?

A) “भी” धातुनिर्मितः “भीः” शब्दः ।

B) “वद्” धातुनिर्मितः “वद्यम्” शब्दः ।

C) “हन्” धातुनिर्मितः “हत्या” शब्दः ।

D) “ज्ञा” धातुनिर्मितः “ज्ञः” शब्दः ।

E) “रु” धातुनिर्मितः “रावः” शब्दः ।

Q32. अधोदत्तासु कासु आवलीषु विद्यमानाः सर्वेऽपि कृदन्ताः एकेनैव कृत्-प्रत्ययेन सिद्ध्यन्ति ?

A) हरत्, जरत्, चरत्

B) अश्वत्थामन्, सुशर्मन्, सुदामन्

C) भूष्णु, धृष्णु, जिष्णु

D) हस्तिघ्न, कृतघ्न, शत्रुघ्न

E) शक्रग, पन्नग, विहङ्ग

Q33. सूत्रपाठे अधोदत्तेषु किं किं परिवर्तनं क्रियते चेदपि न दोषाय ?

A) “तव्यत्तव्यानीयरः” तथा “अचो यत्” इति द्वे सूत्रे निष्कास्य तयोः स्थाने “तव्यत्तव्यानीयर्यतः” इति एकस्य सूत्रस्य निर्माणम्

B) “इच्छार्थेषु लिङ्लोटौ” तथा “समानकर्तृकेषु तुमुन्” इति द्वे सूत्रे निष्कास्य तयोः स्थाने “इच्छार्थेषु लिङ्लोट्तुमुनः” इति एकस्य सूत्रस्य निर्माणम्

C) “भावे” तथा “अकर्तरि च कारके संज्ञायाम्” इति द्वे सूत्रे निष्कास्य तयोः स्थाने “भावे अकर्तरि च कारके संज्ञायाम्” इति एकस्य सूत्रस्य निर्माणम्

D) “न क्त्वा सेट्” इति सम्पूर्णसूत्रस्य निष्कासनम्

E) “गेहे कः” इति सम्पूर्णसूत्रस्य निष्कासनम्

Q34. अधोदत्तेभ्यः कानि सुबन्तपदानि औपदेशिकधातोः चतुरः प्रत्ययान् योजयित्वा सिद्ध्यन्ति ?

A) जुगुप्समाना B) चिकीर्षा C) कालिम्मन्यः

D) जनमेजयः E) व्यावहासी

Q35. अधोदत्तेभ्यः कानि वाक्यानि दोषरहितानि ?

A) देवदत्तः चित्रकारः अस्ति । B) देवदत्तः चित्रकरः अस्ति ।

C) देवदत्तः चित्रकर्ता अस्ति । D) देवदत्तः चित्रकारकः अस्ति ।

E) देवदत्तः चित्रकृत् अस्ति ।

Q36. "ब्रह्मभ्रूणवृत्रेषु क्विप्" इति सूत्रस्य आधारेण अधोदत्ताः के के प्रयोगाः साधुत्वं प्राप्नुवन्ति ?

A) भ्रूणं हन्ति इति भ्रूणहा B) असुरं हन्ति इति इति असुरहा

C) ब्रह्माणम् अहन् इति ब्रह्महा D) वृत्रं जेष्यति इति वृत्रजित्

E) असुरं हनिष्यति इति असुरहा

Q37. अधोदत्तेषु केषु वाक्येषु "वने चरति" इत्यस्य स्थाने "वनचरः" इति शब्दप्रयोगः भवितुम् अर्हति?

A) कस्मिन् वने चरति अयं सिंहः ? B) विशाले वने चरति अयं सिंहः ।

C) वने नैव चरति अयं सिंहः । D) एकस्मिन्नेव वने चरति अयं सिंहः ।

E) वने चरति वा अयं सिंहः ?

Q38. अधोदत्तेषु केषु सूत्रेषु विषयसप्तमी प्रयुक्ता अस्ति ?

A) आदेच उपदेशेऽशिति B) निष्ठायां सेटि C) इको यणचि

D) क्क्ङिति च E) अचः परस्मिन् पूर्वविधौ

Q39: अष्टाध्याय्याः सूत्रेषु विद्यमानानां नञ्-समासनिर्मितानां पदानाम् अर्थनिर्णये "प्रसज्यप्रतिषेधः" इति पक्षः अपि सम्भवति - इत्यस्य सूत्रपाठे विद्यमानं ज्ञापकं किम् ?

A) "अकर्तरि च कारके संज्ञायाम्" इत्यस्मिन् सूत्रे कारकग्रहणम्

B) "लटः शतृशानचावप्रथमाप्रथमासमानाधिकरणे" इत्यस्मिन् सूत्रे समानाधिकरणग्रहणम्

C) "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इत्यस्मिन् सूत्रे "समासे अनञ्पूर्वे" इति निर्देशः

D) "आदेच उपदेशेऽशिति" इत्यस्मिन् सूत्रे अशितिग्रहणम्

E) "रामात्त्", "अवदत्त्" एतादृशानां शब्दानां भाषायां साधुत्वम्

Q40. "आने मुक्" अस्मिन् सूत्रे विद्यमानेन "मुक्" इति शब्देन किं किं स्पष्टी भवति ?

A) यदागमपरिभाषा अनित्या अस्ति - इति

B) आगमशास्त्रम् अनित्यम् अस्ति - इति

C) शानच्-प्रत्ययान्तशब्दानां प्रथमान्तरूपाणि पाणिनिना अनुमन्यन्ते - इति

D) अयम् आगमः अन्त्यावयवरूपेण विधीयते - इति

E) अस्मिन् आगमे कृते शानच्-प्रत्ययः किद्वत् भवति - इति

Q41. हितोपदेशस्य अधोदत्ते श्लोके उपयुक्तान् कृत्प्रत्ययान् चिनुत -

यन्नवे भाजने लग्नः संस्कारो नाऽन्यथा भवेत् । कथाच्छलेन बालानां नीतिस्तदिह कथ्यते ॥

A) अ B) अप् C) अङ् D) अच् E) अण्

Q42. अधोदत्ते श्लोके प्रयुक्ताः कति भिन्नाः कृदन्तशब्दाः कित्-प्रत्यययोजनेन निर्मिताः सन्ति ?

पुस्तकस्था तु या विद्या, परहस्तं गतं धनम् । कार्यकाले समुत्पन्ने, न सा विद्या न तद्धनम् ॥

A) एकः B) द्वौ C) त्रयः D) चत्वारः E) पञ्च

Q43. विष्णुसहस्रनाम्नः उद्धृते अधोदत्ते श्लोके विद्यमाने "दुर्मर्षण"शब्दे कः कृत्प्रत्ययः अस्ति ?

अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा । गुरुर्गुरुतमो धामः सत्यः सत्यपराक्रमः ॥

A) युच्　　B) ल्यु　　C) ल्युट्　　D) ख्युन्　　E) ज्युट्

Q44. "नारायणीयम्" इत्यस्मात् ग्रन्थात् उद्धृत्य एकः श्लोकः अधः दत्तः अस्ति । अस्मिन् श्लोके प्रयुक्तानाम् कृत्प्रत्ययानाम् आवलीः चिनुत ।

तदनु काचन त्वत्कराम्बुजं सपदि गृह्णती निर्विशङ्कितम्।

घनपयोधरे सन्निधाय सा पुलकसंवृता तस्थुषी चिरम् ॥

A) क्त, अङ्, ल्यप्　　B) क्त, अण्, अच्　　C) शतृ, ड, क्वसु

D) अङ्, अच्, ड　　E) शतृ, अच्, ल्यप्

Q45. अधोदत्ते श्लोके "श्रेयस्काम" इत्यत्र कः कृत्प्रत्ययः ?

आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥

A) घञ्　　B) अच्　　C) अण्　　D) काम्यच्　　E) णमुल्

Q46. अधोदत्ते श्लोके विद्यमानेषु क्त-प्रत्ययनिर्मितेषु शब्देषु कीदृशम् प्रत्ययविधानम् कृतम् अस्ति ?

कृष्णस्य क्रीडितां भूमिं नृत्तं च शयितं स्थलम् । यातानप्यशितान्देशान् मृगयन्ते स्म गोपिकाः ॥

A) अधिकरणे क्तः　　B) वर्तमाने क्तः　　C) कर्तरि क्तः

D) नपुंसके भावे क्तः　　E) आदिकर्मणि क्तः

Q47. अधोदत्ते श्लोके कति भिन्नाः कृत्प्रत्ययाः प्रयुक्ताः सन्ति ?

स्वायत्तमेकान्तहितं विधात्रा विनिर्मितं छादनमज्ञतायाः ।

विशेषतः सर्वविदां समाजे विभूषणं मौनमपण्डितानाम् ॥

A) षट्　　B) सप्त　　C) अष्ट　　D) नव　　E) दश

Q48. अधोदत्ते श्लोके के के दोषाः कृताः दृश्यन्ते ?

तेनाधितं शृतं तेन, तेन सर्वमनुष्ठितम् । येनाशाः पृष्ठतः कृत्वा नैराश्यमवलम्बितम् ॥

A) "तेनाधितम्" इत्यस्य स्थाने "तेनाधीतम्" इति स्यात्।

B) "शृतम्" इत्यस्य स्थाने "श्रुतम्" इति स्यात् ।

C) "अनुष्ठितम्" इत्यस्य स्थाने "अनुस्थितम्" इति स्यात्।

D) "पृष्ठतः" इत्यस्य स्थाने "पृष्टतः" इति स्यात्।

E) "लम्बितम्" इत्यस्य स्थाने "लबितम्" इति स्यात् ।

Q49. अधोदत्ते श्लोके चतुर्षु शब्देषु एकेनैव सूत्रेण कृत्-प्रत्ययविधानं क्रियते । किं तत् सूत्रम् ?

स्थितिज्ञं सर्वशास्त्राणां सामोद्गीतिविशारदम् । सोमपीतिपवित्रास्यं वपापक्तिविचक्षणम् ॥

A) आतोऽनुपसर्गे कः

B) अकर्तरि च कारके संज्ञायाम्

C) स्त्रियां क्तिन्

D) स्थागापापचो भावे

E) ल्युट् च

Q50. शिशुपालवधस्य आदिमः श्लोकः अधः दत्तः अस्ति । अस्मिन् श्लोके विद्यमानस्य "वसन् ददर्श" इति प्रयोगस्य अर्थः केन सूत्रेण साधुत्वं प्राप्नोति?

श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि ।

वसन्ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥

A) वर्तमाने लट्

B) भूतेऽपि दृश्यन्ते

C) भविष्यति गम्यादयः

D) धातुसम्बन्धे प्रत्ययाः

E) कृत्यल्युटो बहुलम्

**Instructions for Q51 and Q52:** नीतिशतकस्य कश्चन श्लोकः अधः दत्तः अस्ति । अस्य आधारेण ततः विद्यमानयोः **द्वयोः प्रश्नयोः** [51, 52] उत्तराणि लिखत ।

मनसि वचसि काये पुण्यपीयूषपूर्णाः त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।
परगुणपरमाणून् पर्वतीकृत्य नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ?

Q51. अस्मिन् श्लोके कतीनां शब्दानां प्रक्रियायाम् "वर्तमाने लट्" इति सूत्रम् प्रयुज्यते ?

A) एकस्य B) द्वयोः C) त्रयाणाम्
D) चतुर्णाम् E) पञ्चानाम्

Q52. अस्मिन् श्लोके "पर्वतीकृत्य" इत्यत्र के के प्रत्ययाः ?

A) ल्यप् B) क्यप् C) ण्यत् D) यत् E) च्वि

**Instructions for Q53 and Q54:** अधोदत्तस्य श्लोकस्य आधारेण ततः विद्यमानयोः **द्वयोः प्रश्नयोः** [53, 54] उत्तराणि लिखत ।

योगेन चित्तस्य पदेन वाचः मलं शरीरस्य च वैद्यकेन ।
योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि ॥

Q53. अस्मिन् श्लोके "आनतः" इत्यत्र कीदृशः क्त-प्रत्ययः भवितुम् अर्हति ?

A) कर्तरि क्तः B) कर्मणि क्तः C) वर्तमाने क्तः
D) आदिकर्मणि क्तः E) अधिकरणे क्तः

Q54. अस्मिन् श्लोके घञ्-प्रत्ययनिर्मिताः कति शब्दाः प्रयुक्ताः सन्ति ?

A) एकः B) द्वौ C) त्रयः D) चत्वारः E) पञ्च

**Instructions for Q55 and Q56:** संक्षेपरामायणस्य अधोदत्तस्य श्लोकस्य आधारेण ततः विद्यमानयोः **द्वयोः प्रश्नयोः** [55, 56] उत्तराणि लिखत।

शबर्या पूजितस्सम्यक् रामो दशरथात्मजः । पम्पातीरे हनुमता सङ्गतो वानरेण ह ॥

Q55. अस्मिन् श्लोके प्रयुक्ते "पूजित" इति शब्दे क्त-प्रत्ययः केन सूत्रेण / वार्त्तिकेन दीयते ?

A) ३.२.१०२ निष्ठा

B) (३.२.१०२ वार्त्तिकम्) आदिकर्मणि निष्ठा वक्तव्या

C) ३.२.१८८ मतिबुद्धिपूजार्थेभ्यश्च

D) ३.३.११४ नपुंसके भावे क्तः

E) ३.४.७२ गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्यश्च

Q56. अत्र प्रयुक्तस्य "राम" इति शब्दस्य के के लौकिकविग्रहाः उचिताः ?

A) रमते सः रामः

B) रमयते इति रामः

C) रम्यते इति रामः

D) रमन्ते अनेन इति रामः

E) रमन्ते अस्मिन् इति रामः

**Instructions for Q57 and Q58:** देवीसप्तशत्याः कश्चन श्लोकः अधः दत्तः अस्ति । तस्य आधारेण ततः विद्यमानयोः **द्वयोः प्रश्नयोः** [57, 58] उत्तराणि लिखत।

तान् विषण्णान् सुरान् दृष्ट्वा चण्डिका प्राह सत्वरा। उवाच कालीं चामुण्डे विस्तीर्णं वदनं कुरु।

Q57. अत्र प्रयुक्तयोः "विषण्ण" तथा "विस्तीर्ण" एतयोः द्वयोः अपि कृदन्तयोः प्रक्रियायाम् विद्यमानानि समानानि सूत्राणि कानि ?

A) धात्वादेः षः सः

B) उपपदमतिङ्

C) एकाच उपदेशेऽनुदात्तात्

D) रदाभ्यां निष्ठातो नः पूर्वस्य च दः

E) रषाभ्यां नो णः समानपदे

Q58. "दृष्ट्वा" इत्यस्य प्रक्रियायाम् किं किं कार्यं भवति ?

A) सम्प्रसारणम्

B) ष्टुत्वम्

C) जश्त्वम्

D) षत्वम्

E) चर्त्वम्

**Instructions for Q59 and Q60:** अधोदत्तस्य पद्यांशस्य आधारेण ततः विद्यमानयोः **द्वयोः प्रश्नयोः** [59, 60] उत्तराणि लिखत ।

गहनारण्ये घनान्धकारे बन्धुजना ये स्थिता गह्वरे । तत्र मया सञ्चरणीयं लोकहितं मम करणीयम् ।

Q59. “लोकहितं मम करणीयम्” अत्र षष्ठीविभक्तिः केन सूत्रेण ?

A) कर्तृकर्मणोः कृति
B) उभयप्राप्तौ कर्मणि
C) क्तस्य च वर्तमाने
D) अधिकरणवाचिनश्च
E) कृत्यानां कर्तरि वा

Q60. “तत्र मया सञ्चरणीयम्” अत्र तृतीयाविभक्तिः केन सूत्रेण ?

A) कर्तृकरणयोस्तृतीया
B) कृत्यानां कर्तरि वा
C) कर्तृकर्मणोः कृति
D) न लोकाव्ययनिष्ठाखलर्थतृनाम्
E) तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्

**Instructions for Q61 to Q65:** मेघदूतस्य द्वौ श्लोकौ अधः दत्तौ स्तः । एतयोः आधारेण ततः दत्तानां **पञ्चानाम् प्रश्नानाम्** [61 तः 65] उत्तराणि लिखत ।

जातं वंशे भुवनविदिते पुष्करावर्त्तकानाम् । जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ।
तेनार्थित्वं त्वयि विधिवशाद् दूरबन्धुर्गतोऽहं । याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥
सन्तप्तानां त्वमसि शरणं तत्पयोद प्रियायाः । सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य ।
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणाम् । बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥

Q61. अत्र निर्दिष्टयोः श्लोकयोः आहत्य कति भिन्नाः शब्दाः क-प्रत्ययनिर्मिताः सन्ति ?

A) एकोऽपि न
B) केवलम् एकः
C) द्वौ
D) त्रयः
E) चत्वारः अधिकाः वा

Q62. "याच्ञा" इत्यत्र कः कृत्प्रत्ययः ?

A) अञ्    B) ञ    C) नन्    D) नङ्    E) न

Q63. "भुवनविदिते" अस्मिन् शब्दे कस्य गणस्य "विद्" धातुः उपयुक्तः अस्ति ?

A) भ्वादिगणस्य    B) अदादिगणस्य    C) दिवादिगणस्य

D) तुदादिगणस्य    E) रुधादिगणस्य

Q64. "पयोद" अस्मिन् शब्दे यकारोत्तरः ओकारः केन सूत्रेण ?

A) पुगन्तलघूपधस्य च    B) सहिवहोरोदवर्णस्य

C) अतो रोरप्लुतादप्लुते    D) आद्गुणः    E) हशि च

Q65. अत्र निर्दिष्टयोः श्लोकयोः आहत्य कति भिन्नाः शब्दाः निष्ठाप्रत्ययनिर्मिताः सन्ति ?

A) पञ्च    B) षट्    C) सप्त    D) अष्ट    E) नव

**Instructions for Q66 to Q70:** बाणविरचितायाः कादम्बर्याः कश्चन अंशः अधः दीयते । अस्य आधारेण ततः दत्तानाम् **पञ्चानाम् प्रश्नानाम्** [66 तः 70] उत्तराणि लिखत ।

"एकत्र खलु मधुमाससमलयमारुतप्रभृतयः समस्ताः, एकत्र चायं पापकारी चन्द्रहतको न शक्यते सोढुम्, इदमतिदुर्विषहं मे हृदयम्, अस्य चोद्गमनमिदं सदाहज्वरग्रस्तस्याङ्गारवर्षः, शीतार्तस्य तुषारपातः, विषविस्फोटमूर्च्छितस्य कृष्णसर्पदंशः" इत्येव चिन्तयन्तीमेव चन्द्रोदयोपनीता कमलवनम्लानिनिद्रेव मूर्च्छा मां निमीलितलोचनामकार्षीत् ।

Q66. अत्र विद्यमानानि घञ्-प्रत्ययान्तप्रातिपदिकानि कानि ?

A) तुषारपात    B) अङ्गारवर्ष    C) कृष्णसर्पदंश

D) सदाहज्वर    E) विषविस्फोट

Q67. अत्र विद्यमाने “मूर्च्छा” शब्दे चकारः कथम् आगतः ?

A) “छे च” इति तुगागमः, ततः “स्तोः श्चुना श्चुः” इतिश्चुत्वम् ।

B) “दीर्घात्” इति तुगागमः, ततः “स्तोः श्चुना श्चुः”इति श्चुत्वम् ।

C) “ह्रस्वस्य पिति कृति तुक्” इति तुगागमः, ततः “स्तोः श्चुना श्चुः” इति श्चुत्वम् ।

D) “अनचि च” इति छकारस्य द्वित्वम्, ततः “खरि च” इति छकारस्य चकारः ।

E) “अचो रहाभ्यां द्वे” इति छकारस्य द्वित्वम्, ततः “खरि च” इति छकारस्य चकारः ।

Q68. अत्र विद्यमानस्य “सोढुम्” शब्दस्य प्रक्रियायाम् “पूर्वत्रासिद्धम्” इति नियमस्य कतिवारम् उल्लङ्घनं भवति ?

A) एकवारम् अपि न  B) एकवारम्  C) द्विवारम्

D) त्रिवारम्  E) चतुर्वारम्

Q69. अत्र विद्यमाने “चिन्तयन्ती” इति शब्दे द्वितीयः नकारः केन सूत्रेण ?

A) उगिदचां सर्वनामस्थानेऽधातोः  B) आच्छीनद्योर्नुम्

C) चिन्तिपूजिकथिकुम्बिचर्चश्च  D) उगितश्च  E) शप्श्यनोर्नित्यम्

Q70. अत्र विद्यमानाः के के शब्दाः “स्त्रियाम् क्तिन्”इत्यधिकारे पाठितैः प्रत्ययैः सिद्ध्यन्ति ?

A) “क्तिन्” प्रत्ययनिर्मितः “म्लानिः” शब्दः

B) “अङ्” प्रत्ययनिर्मितः “निद्रा” शब्दः

C) “अ” प्रत्ययनिर्मितः “मूर्च्छा” शब्दः

D) “युच्” प्रत्ययनिर्मितः “निमीलितलोचना” शब्दः

E) “क्त” प्रत्ययनिर्मितः “चन्द्रोदयोपनीता” शब्दः

**<u>Instructions for Q71 to Q75:</u>** भट्टनारायणविरचितस्य वेणीसंहारनाटकस्य कश्चन अंशः अधः दत्तः अस्ति । अस्य आधारेण ततः दत्तानाम् **पञ्चानाम् प्रश्नानाम्** [71 तः 75] उत्तराणि लिखत ।

युधिष्ठिर, युधिष्ठिर, अजातशत्रो, अमिथ्यावादिन्, धर्मपुत्र, सानुजस्य ते किमनेनापकृतम् ? अथ वा किमनेनालीकप्रकृतिजिह्मचेतसा ? अर्जुन, सात्यके, बाहुशालिन्वृकोदर, माधव, युक्तं नाम भवतां सुरासुरमनुजलोकैकधनुर्धरस्य द्विजन्मनः परिणतवयसः सर्वाचार्यस्य विशेषतो मम पितुरमुना द्रुपदकुलकलङ्केन मनुजपशुना स्पृश्यमानमुत्तमाङ्गमुपेतम् । अथ वा, सर्व एवैते पातकिनः । किमेतैः ।

Q71. "युधिष्ठिरः" अस्मिन् शब्दे षकारः केन सूत्रेण ?

A) अपदान्तस्य मूर्धन्यः B) आदेशप्रत्यययोः

C) उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्

D) प्रष्ठोग्रगामिनि E) एतेषु किमपि न

Q72. अत्र कति "ड"प्रत्ययनिर्मिताः भिन्नाः कृदन्ताः प्रयुक्ताः दृश्यन्ते ?

A) एकः अपि न B) केवलम् एकः C) द्वौ D) त्रयः E) चत्वारः

Q73. "स्पृश्यमान" अस्य सिद्धौ के के प्रत्ययाः प्रयुज्यन्ते ?

A) शप् B) श्यन् C) श D) यक् E) मुक्

Q74. "अमिथ्यावादिन्" अत्र कः प्रत्ययः ?

A) इनि B) णिनि C) घिनुण् D) इनुण् E) इन्

Q75. "उपेतम्" अस्मिन् शब्दे एकारः केन सूत्रेण आगतः ?

A) आद्गुणः B) एत्येधत्यूठ्सु C) एङि पररूपम्

D) सार्वधातुकार्धधातुकयोः E) पुगन्तलघूपधस्य च

**Instructions for Q76 to Q80:** शास्त्रे उक्तानि महापुरुषस्य लक्षणानि अधः त्रिषु श्लोकेषु दीयन्ते। एतेषाम् आधारेण ततः पृष्टानां **पञ्चानां प्रश्नानाम्** [76 तः 80] उत्तराणि लिखत।

मातृतः पितृतः शुद्धः शुद्धभावो जितेन्द्रियः। सर्वागमानां सारज्ञः सर्वशास्त्रार्थतत्त्ववित्॥

परोपकारनिरतो जपपूजादितत्परः। अमोघवचनश्शान्तो वेदवेदाङ्गपारगः॥

योगमार्गानुसन्धायी देवताहृदयङ्गमः। इत्यादिगुणसम्पन्नः गुरुरागमसम्मतः॥

Q76. अस्मिन् श्लोके विद्यमाने "तत्त्ववित्" शब्दे कीदृशः कृत्प्रत्ययः ?

A) चित्  B) कित्  C) पित्  D) णित्  E) नित्

Q77. अस्मिन् श्लोके विद्यमाने "हृदयङ्गमः" शब्दे कः कृत्प्रत्ययः ?

A) ख  B) खश्  C) खच्  D) ड  E) खञ्

Q78. अस्मिन् श्लोके विद्यमाने "वेदाङ्गपारगः" शब्दे कानि कानि उपपदानि ?

A) वेद  B) अङ्ग  C) पार  D) वेदाङ्ग  E) वेदाङ्गपार

Q79. अस्मिन् श्लोके विद्यमाने "सारज्ञः" शब्दे केन सूत्रेण/वार्त्तिकेन कृत्प्रत्ययः ?

A) आतश्चोपसर्गे

B) आतोऽनुपसर्गे कः

C) इगुपधज्ञाप्रीकिरः कः

D) (वार्त्तिकम्) सर्वधातुभ्यः अज्विधिः

E) श्याद्व्यधास्रुसंस्रवतीणवसाऽवहृलिहश्लिषश्वसश्च

Q80. अस्मिन् श्लोके विद्यमाने "अनुसन्धायी" शब्दस्य प्रक्रियायाम् कानि कार्याणि क्रियन्ते ?

A) आगमः  B) आदेशः  C) लोपः  D) द्वित्वम्  E) निपातनम्

**<u>Instructions for Q81 to Q85:</u>** महाभाष्यस्य “कृदतिङ्” सूत्रस्य व्याख्यानम् अधः दत्तम् अस्ति । अस्य आधारेण ततः दत्तानाम् **पञ्चानाम् प्रश्नानाम्** [81 तः 85] उत्तराणि लिखत ।

अतिङिति किमर्थम् ? पचति पठति । अतिङिति शक्यमकर्तुम्। कस्मान्न भवति - पचति पठतीति ? धातोः परस्य कृत्संज्ञा । प्राक् च लादेशाद्धात्वधिकारः । एवमपि स्थानिवद्भावात्प्राप्नोति । अथातिङित्युच्यमाने यावता स्थानिवद्भावः । कथमिवैतत्सिध्यति ? प्रतिषेधवचनसार्मथ्यात् । अथ वा तिङ्भाविनो लकारस्य कृत्संज्ञाप्रतिषेधः । किं च स्यात् यद्यत्र कृत्संज्ञा स्यात् ? कृत्प्रातिपदिकमिति प्रातिपदिकसंज्ञा स्यात् । प्रातिपदिकात् इति स्वाद्युत्पत्तिः प्रसज्येत । नैष दोषः । एकत्वादिषु अर्थेषु स्वादयो विधीयन्ते । ते चात्र तिङोक्ता एकत्वादय इतिकृत्वा उक्तार्थत्वान्न भविष्यन्ति । टाबादयस्तर्हि तिङन्ताद् मा भूवन्निति । स्त्रियां टाबादयो विधीयन्ते। न च तिङन्तस्य स्त्रीत्वेन योगोऽस्ति । अणादयस्तर्हि तिङन्तान्मा भूवन्निति । अपत्यादिष्वणादयो विधीयन्ते । न च तिङन्तस्यापत्यादिभिर्योगोऽस्ति । अथापि कथंचिद्योगः स्यात् । एवमपि न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति न तिङन्तादणादयो भवन्तीति। यदयं क्वचित्तद्धितविधौ तिङ्ग्रहणं करोति - अतिशायने तमबिष्ठनौ, तिङश्च । इह तर्हि पचति पठतीतिह्रस्वस्य पिति कृति तुग्भवतीति तुक् प्राप्नोति । धातोरिति वर्तते । एवमपि चिकीर्षतीत्यत्रापि प्राप्नोति। अत्रापि शपा व्यवधानात्। एकादेशे कृते नास्ति व्यवधानम्। एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेवेति ॥

Q81. अस्मिन् व्याख्याने केषाम् कृत्संज्ञाविषये दोषदर्शनं कृतमस्ति ?

A) तिङ्प्रत्ययानाम्
B) सुप्प्रत्ययानाम्
C) तद्धितप्रत्यानाम्
D) सनादिप्रत्ययानाम्
E) लकारप्रत्ययानाम्

Q82. “एकादेशे कृते नास्ति व्यवधानम्” - इति पूर्वपक्षः। कथम् ?

A) अन्तादिवच्च इति सूत्रेण
B) स्थानिवद्भावेन
C) स्थानिवद्भावनिषेधेन
D) व्यवधानस्य लोपेन
E) शप्-प्रत्यये शकारग्रहणेन

Q83. किम् नाम "आचार्यप्रवृत्तिः" ?

A) पाणिनिना निर्मितं सूत्रम्

B) वार्त्तिककारेण कृतं वार्त्तिकम्

C) भाष्यकारेण उक्तः सिद्धान्तः

D) भट्टोजिदीक्षितेन विरचिता व्याख्या

E) नागेशेन सङ्कलिता परिभाषा

Q84. अत्र पूर्वपक्षस्य मतेन "पचति" इत्यत्र "तुक्" कुत्र प्राप्नोति ?

A) पकारात् अनन्तरम्

B) पकारोत्तरात् अकारात् अनन्तरम्

C) चकारात् अनन्तरम्

D) चकारोत्तरात् अकारात् अनन्तरम्

E) तकारोत्तात् इकारात् अनन्तरम्

Q85. "न च तिङन्तस्य स्त्रीत्वेन योगोऽस्ति" अस्य वाक्यस्य कः अर्थः ?

A) तिङन्तस्य स्त्रीप्रत्ययान्तशब्देन सह समासः नैव सम्भवति ।

B) तिङन्तस्य स्त्रीत्वेन सह न कश्चन सम्बन्धः विद्यते।

C) स्त्रीप्रत्ययान्तशब्देभ्यः तिङ्प्रत्ययाः नैव भवितुम् अर्हन्ति ।

D) तिङन्तेषु वाऽसरूपविधिः अवश्यं सम्भवति ।

E) तिङन्तेषु वाऽसरूपविधिः नैव सम्भवति ।

**<u>Instructions for Q 86 to Q90:</u>** सिद्धान्तकौमुद्याः "ण्वुल्तृचौ" सूत्रस्य व्याख्यानम् अधः दत्तम् अस्ति । अस्य आधारेण ततः दत्तानाम् **पञ्चानां प्रश्नानाम्** [86 तः 90] उत्तराणि लिखत ।

धातोरेतौ स्तः । कर्तरि कृत् इति कर्त्रर्थे । युवोरनाकौ। कारकः । कर्ता । वोढुमर्हो वोढा । कारिका । कर्त्री । गाङ्कुटा- इति ङित्त्वम् । कुटिता । अञ्णिदित्युक्तेर्नङित्त्वम् । कोटकः । विज इट् । विजिता । हनस्तोऽचिण्णलोः । घातकः । आतो युक् । दायकः । नोदात्तोपदेशस्य इति न वृद्धिः । शमकः । दमकः । अनिटस्तु नियामकः । जनिवध्योश्च । जनकः । वधहिंसायाम् । वधकः । रधिजभोरचि ।

रन्धकः । जम्भकः । नेट्यलिटि रधेः । रधिता । रद्धा । मस्जिनशोः इति नुम् । मङ्क्ता । नंष्टा । नशिता । रभेरशब्लिटोः । रम्भकः । रब्धा । लभेश्च । लम्भकः ।लब्धा । तीषसह- इति वेट् । एषिता । एष्टा । सहिता । सोढा । दरिद्रातेरालोपः । दरिद्रिता । ण्वुलि न । दरिद्रायकः । कृत्यल्युट इत्येव सूत्रमस्तु । यत्र विहितास्ततोऽन्यत्रापि स्युरित्यर्थात् । एवं च बहुलग्रहणं योगविभागेन कृन्मात्रस्यार्थव्यभिचारार्थम् । पादाभ्यां ह्रियते पादहारकः । कर्मणि ण्वुल् । क्रमेः कर्तर्यात्मनेपदविषयात्कृत इण्निषेधो वाच्यः । प्रक्रन्ता । कर्तरीति किम् । प्रक्रमितव्यम् । आत्मनेपदेति किम् । संक्रमिता । अनन्यभावे विषयशब्दः । तेन अनुपसर्गाद्वा इति विकल्पार्हस्य न निषेधः । क्रमिता। तदर्हत्वमेव तद्विषयत्वम् । तेन क्रन्तेत्यपीति केचित् । गमेरिट्- इत्यत्र परस्मैपदग्रहणं तङानयोरभावं लक्षयति । संजिगमिषिता । एवं न वृद्भ्यश्चतुर्भ्यः । विवृत्सिता। यङन्तात् ण्वुल्। अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । पापचकः । यङ्लुगन्तात्तु पापाचकः ॥

Q86. “कृन्मात्रस्यार्थव्यभिचारार्थम्” - अस्य कः अर्थः ?

A) कृत्प्रत्ययाः निर्दिष्टान् कारकान् विहाय अन्येषु कारकेषु अपि भवन्ति ।

B) कृत्प्रत्ययाः निर्दिष्टान् उपपदान् विहाय अन्येषु उपपदेषु अपि भवन्ति ।

C) कृत्प्रत्ययाः निर्दिष्टान् धातून् विहाय अन्येभ्यः धातुभ्यः अपि भवन्ति ।

D) कृत्प्रत्ययाः निर्दिष्टान् कालान् विहाय अन्येषु कालेषु अपि भवन्ति ।

E) कृत्प्रत्ययाः निर्दिष्टान् उपसर्गान् विहाय अन्येषु उपसर्गेषु अपि भवन्ति ।

Q87. “रधिता” तथा “रद्धा” इति द्विविधम् रूपम् कथम्?

A) “नेट्यलिटि रधेः” इत्यनेन

B) “रधिजभोरचि” इत्यनेन

C) “रभेरशब्लिटोः” इत्यनेन

D) “तीषसहलुभरुषरिषः” इत्यनेन

E) एतेषु किमपि न

Q88. “अञ्णिदित्युक्तेर्न ङित्त्वम्” - इदं वाक्यम् कस्य रूपस्य विषये दत्तम् अस्ति ?

A) कर्त्री B) कुटिता C) कोटकः D) विजिता E) घातकः

Q89. “पापाचक” इत्यस्य रूपसिद्धौ अधोदत्तेषु किं किं कृतम् अस्ति ?

A) अल्लोपः B) स्थानिवद्भावः C) वृद्धिः

D) प्रत्ययादेशः E) प्रत्ययलोपः

Q90. “तदर्हत्वमेव तद्विषयत्वम्” इत्यत्र “तदर्हत्वम्” अस्य कः अर्थः ?

A) तृच्प्रत्ययविधानार्हत्वम् B) अनुपसर्गार्हत्वम् C) आत्मनेपदार्हत्वम्

D) इण्निषेधार्हत्वम् E) इडागमार्हत्वम्

**Instructions for Q91 to Q95** - “उणादयो बहुलम्” अस्मिन् सूत्रे काशिकायां निर्दिष्टा कारिका अधः दत्ता अस्ति । अस्याः आधारेण ततः दत्तानां **पञ्चानाम् प्रश्नानाम्** [96 तः 100] उत्तराणि लिखत ।

बाहुलकं प्रकृतेस्तनुदृष्टेः प्रायसमुच्चयनादपि तेषाम् ।

कार्यसशेषविधेश्च तदुक्तं नैगमरूढिभवं हि सुसाधु ॥१॥

नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् ।

यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥२॥

संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।

कार्याद् विद्यादनूबन्धम् एतच्छास्त्रमुणादिषु ॥३॥

Q91. “अनूबन्धम्” अत्र उकारस्य दीर्घः केन सूत्रेण ?

A) अकर्तरि च कारके संज्ञायाम् B) उपसर्गस्य घञ्यमनुष्ये बहुलम्

C) अधिकरणे बन्धः D) उपसर्गात् खल्घञोः

E) कृत्यल्युटो बहुलम्

Q92. “प्रकृतेस्तनुदृष्टेः” अस्य कः अर्थः ?

A) प्रकृतयः न्यूनाः सन्ति इति
B) प्रकृतयः विरलाः सन्ति इति
C) प्रकृतयः ह्रस्वाः सन्ति इति
D) प्रकृतयः विपुलाः सन्ति इति
E) प्रकृतयः कठिनाः सन्ति इति

Q93. “शकटस्य तोकम्” इत्यनेन कस्य निर्देशः भवति ?

A) शाकटायनमुनेः
B) शाकटायनमुनेः उणादिपाठस्य
C) शाकटायनमुनेः सूत्रपाठस्य
D) शाकटायनमुनेः धातुपाठस्य
E) शाकटायनमुनेः व्याकरणस्य

Q94. “बाहुलकम्” इति शब्दः “बहुलस्य भावः” इत्यस्मिन् अर्थे अत्र प्रयुक्तः अस्ति । “बहून् अर्थान् लाति तत् बहुलम्” इति बहुलशब्दस्य वृत्तिः। अत्र कः कृत्प्रत्ययः ?

A) अण्
B) ण
C) क
D) घञ्
E) घ

Q95. एतेषु श्लोकेषु विद्यमानाः कति भिन्नाः शब्दाः “स्त्रियाम् क्तिन्” अस्मिन् अधिकारे पाठितैः प्रत्ययैः सिद्ध्यन्ति ?

A) त्रयः
B) चत्वारः
C) पञ्च
D) षट्
E) सप्त

**<u>Instructions for Q96 to Q100:</u>** अधोदत्ते कूटबन्धे अष्टाध्याय्याः बहूनि सूत्राणि इतस्ततः (वामतः दक्षिणे / दक्षिणतः वामे / ऊर्ध्वतः अधः / अधतः ऊर्ध्वम् / तिर्यक् - इति भिन्नैः प्रकारैः) निबद्धानि सन्ति । तानि सर्वाणि अन्विष्य तेषाम् आधारेण ततः दत्तानां **पञ्चानां प्रश्नानाम्** [96 तः 100] उत्तराणि लिखत ।

| ति | कि | इ | को | य | ण | चि | द | क्र | म् |
|---|---|---|---|---|---|---|---|---|---|
| इ | र | इ | त्सं | ज्ञा | वा | च्या | दा | ओ | या |
| अ | दो | ज | ग्धि | ल्र्य | प्ति | कि | ति | रा | क्षा |
| न्ये | ब्रु | पः | लो | स्य | त | स्ति | द | व | ति |
| भ्यो | वो | टोः | श्नुः | च्छुः | धा | रा | धा | श्य | स्ति |
| पि | व | लु | हो | रि | तोः | वे | त्यो | के | ष |
| दृ | चिः | लृ | कु | न्दु | षा | भा | र्वि | जे | मृ |
| श्य | स | सी | टः | वि | र्णोः | षो | भा | वि | कुः |
| ते | हे | ता | सू | स | न्य | ङोः | षा | भा | चोः |
| छे | च | स्य | त्र | द | द्वा | षः | कु | रः | नि |

Q96. “कृदतिङ्” अस्मिन् अधिकारे विद्यमानानि कति सूत्राणि अस्मिन् कूटबन्धे लभ्यन्ते ?

A) अष्ट B) नव C) दश

D) एकादश E) द्वादश

Q97. अस्मिन् कूटबन्धे पाठितेषु कति सूत्रेषु व्यवस्थितविभाषा प्रयुक्ता अस्ति ?

A) एकस्मिन् अपि सूत्रे न B) एकस्मिन् सूत्रे C) द्वयोः सूत्रयोः

D) त्रिषु सूत्रेषु E) चतुर्षु सूत्रेषु

Q98. अधोदत्तेभ्यः कानि कानि सूत्राणि अस्मिन् कूटबन्धे विद्यन्ते ?

A) प्रत्ययविवक्षायां प्रयुज्यमानं सूत्रम्

B) इडागमप्रकरणस्थं सूत्रम्

C) अतिदेशविधायकं सूत्रम्

D) णत्वप्रकरणस्थं सूत्रम्

E) विकरणप्रत्ययविधायकं सूत्रम्

Q99. अधोदत्तेभ्यः कानि कार्याणि अस्मिन् कूटबन्धे दत्तैः सूत्रैः भवितुम् अर्हन्ति ?

A) तुगागमः

B) नकारलोपः

C) उपधादीर्घः

D) द्वित्वम्

E) कुत्वम्

Q100. अस्मिन् कूटबन्धे विद्यमानैः सूत्रैः कासां परिभाषाणां ज्ञापनं भवति ?

A) निरनुबन्धकग्रहणे न सानुबन्धकस्य

B) ताच्छीलिकेषु वाऽसरूपविधिर्नास्ति

C) व्यपदेशिवदेकस्मिन्

D) नानुबन्धकृतमसारूप्यम्

E) अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यप् बाधते

---

The answersheet is on the next three pages. Please print the pages, write your answers, scan them and send back before the deadline.

# वैयाकरणसिद्धान्तकौमुद्यां कृदन्तप्रकरणम्

Course URL
https://www.sanskritfromhome.in/course/kaumudi12-krdantas/

## अन्तिमपरीक्षा - उत्तरपत्रम्

**Name** (In Devanagari Script) **:** ________________________________

**Email Address :** ________________________________

**Location** (City / State / Country) **:** ________________________________

**Age Range: (Tick the right square)**

| <= 20 | 21-30 | 31-40 | 41-50 | 51-60 | 61-70 | 71-80 | >= 81 |
|---|---|---|---|---|---|---|---|
| | | | | | | | |

**Instructions:** Please write the your answers (A,B,C,D,E) as shown in the example below. Once all the answers are filled, please scan this document and email it to neelesh.bodas@gmail.com with the subject - "SK Kridanta Final Exam Answersheet". The deadline for submission is 3rd Aug 2021, 5:00 AM IST.

Example of writing answers:

| 1 | A C |
|---|---|
| 2 | A B C D E |
| 3 | B |

etc.

| | |
|---|---|
| 61 | |
| 62 | |
| 63 | |
| 64 | |
| 65 | |
| 66 | |
| 67 | |
| 68 | |
| 69 | |
| 70 | |
| 71 | |
| 72 | |
| 73 | |
| 74 | |
| 75 | |
| 76 | |
| 77 | |
| 78 | |
| 79 | |
| 80 | |

| | |
|---|---|
| 81 | |
| 82 | |
| 83 | |
| 84 | |
| 85 | |
| 86 | |
| 87 | |
| 88 | |
| 89 | |
| 90 | |
| 91 | |
| 92 | |
| 93 | |
| 94 | |
| 95 | |
| 96 | |
| 97 | |
| 98 | |
| 99 | |
| 100 | |

---

## Exam Survey

1. Total number of hours spent in answering the exam : _______________

2. Difficultly level of this paper (1 ⇒ very easy, 5⇒ very difficult) _________

3. Your own guess about your marks (out of 100) ________________

---